**न विना परिवादेन रमते दुर्जनो जनः। श्वेव सर्वरसान् भुक्त्वा विनाऽमेध्यं न तृप्यति॥**
**महतां यदेव मूर्धनि तदेव नीचास्तृणाय मन्यन्ते। लिङ्गं प्रणमन्ति बुधाः काकः पुनरासनीकुरुते॥**

ततो देव! ये केचन मद्गृहे वर्त्तन्ते मुनयस्ते मूर्त्तिवन्तो धर्मपिण्डाः क्षान्ति-दान्ति-सरलत्व-मृदुत्व-तपः-शील-सत्य-शौच-निष्परिग्रहत्वप्रमुखगुणरत्नकरण्डाः, चेतसाऽपि न पिपीलिकाया अप्युपतापमिच्छन्ति; कुतः पुनरेवंविधमिह-परलोकविरुद्धमकार्यं ते करिष्यन्ति? अतो न तेषां दूषणलेशोऽप्यस्ति। परं केषाञ्चिद् दुरात्मनां विलसितमेतदिति।' राज्ञोऽपि चित्ते प्रतिभातं तद्, यथाह पुरोहितस्तथैवैतत् संभाव्यत इति।

§५) ततः एतां वार्त्तामाकर्ण्य सर्वैरपि सूराचार्यप्रभृतिभिः परिभावितम्—यदेतान् परदेशागतान् वादे निर्जित्य निस्सारयिष्यामः। ततस्तैराहूयाभिहितः पुरोहितो यत्—'युष्मद्गृहावस्थायियतिभिः सह वयं विचारं कर्तुकामा आस्महे।' तेषां पुरस्तेनोक्तम्—'तान् पृष्ट्वा यत् स्वरूपं तद् भणिष्यामि।' ततः स्वसदने गत्वा भणितास्तेन ते भगवन्तो यथा—'विपक्षाः श्रीपूज्यैः सह विचारं कर्तुं समीहन्ते।' तैरुक्तम्—'किमत्रायुक्तम्? एतदर्थमेव वयमागताः। परमत्रार्थे त्वया न मनागपि भेतव्यम्। किन्त्विदं(त्थं) ते युष्माभिर्वक्तव्याः—'यदि यूयं तैः सह विवदितुकामास्तदा ते श्रीदुर्लभराजप्रत्यक्षं यत्र भणिष्यथ तत्र विचारं करिष्यन्ति। ते हि सद्धर्ममार्गप्रकटनार्थमेव विसंकटग्रामनगरादिष्वटाट्यमानाः सर्वत्र विरचन्तीति। ततो राजसमक्षं ते विचारकरणेऽतीव सोत्कण्ठास्तिष्ठन्तीति।' ततस्तेषां पुरस्तथा पुरोधसोदिते, तैः समस्तैरात्मपाण्डित्यगर्वितैश्चिन्तितम्—सर्वेऽप्यधिकारिणस्तावदस्मद्वशवर्त्तिनस्तेभ्यो वैदेशिकेभ्यः कीदृगस्माकं भयमिति। भणितं च—'भवतु राजसमक्षं विचारः।' ततः प्रमाणितं तद्वचः पुरोहितेन। तैरप्यमुकस्मिन् वासरे पंचासरीयबृहद्देवगृहे विचारो भविष्यतीति निश्चित्य, निवेदितं सर्वेषां पुरः। पुरोहितेनाप्येकान्ते भणितो नृपो यथा—'देव! आगन्तुकमुनिभिः सह स्थानस्थिता विचारं विधातुकामास्तिष्ठन्ति। स च विचारो न्यायवादिराजसमक्षं क्रियमाणः शोभते। ततो युक्तायुक्तविचारदक्षैस्तत्र विचारप्रस्तावे भवद्भिः प्रसद्य प्रत्यक्षैर्भवितव्यम्।' राज्ञोक्तम्—'किमयुक्तम्? कर्तव्यमेवैतदस्माभिः।

§६) ततो निष्टंकितदिने तस्मिन्नेव देवगृहे सिंहासनगद्दिकाचक्कलकादिप्रचुरतरमहत्तरासनाटोपेन पूर्वदेश-दक्षिणदेशाद्युद्भवविचित्रकञ्चिका-नर्मिका-पट्ट-हीर-जादरि-गोजिकानिरमकीटश्वेतपीठराढिकापकलपट्टादिश्वेततराच्छाच्छतरप्रच्छादनपटीकटीतटीपट्टकप्रलम्बलम्बमानदशादण्डोद्दण्डस्पष्टनष्टाभिधेयरजोहरणनामधेयपदार्थकाण्डप्रमाणातिक्रान्तसन्दशप्रान्तमुखवस्त्रिकोज्ज्वलमहामूल्यसूक्ष्मलोचिकामेचककीचकोज्ज्वलचकचकायमाननिर्मानदण्डकादिवेषाडम्बरेण बहलताम्बूलरसाहितदशनरङ्गलिङ्गलिङ्गिनीतूलिकापट्टांशुकाच्छादनपट्टकलितललितसुखासनश्रीकरणिकामात्यश्रेष्ठिप्रमुखधनाढ्यश्राद्धनानाभक्तिविशेषवेषसविशेषभूषणभूषाविष्कृतस्फारतारशृंगारश्राविकाविहितस्वकीयाचार्यगुणवर्णनानिबद्धधवलमङ्गलगीतोच्चारादिबृहत्स्फटाटोपेन सूराचार्यप्रभृतिचतुरशीतिसंख्यचैत्यवास्याचार्याः सूर्योदय एवागत्य स्वहस्तन्यस्तवादस्थलपुस्तिकाः समुपविविशुः। राज्यप्रधानपुरुषैराकारितः श्रीदुर्लभराजमहाराजोऽपि महता भटचट[परि]करेणागत्योपविष्टस्तत्र। ततोऽभिहितं राज्ञा—'पुरोहित! क्षिप्रमाह्वानय तान् स्वसम्मतान् देशान्तरायातानार्यान्।' ततस्त्वरितत्वरितपदं गत्वा श्रीवर्द्धमानसूरीन् एवं विज्ञपयति—'भगवन्! पंचासरीयदेवगृहे सर्वेऽप्याचार्याः सपरिवारा उपविष्टाः। श्रीदुर्लभराजमहीवल्लभश्च। सर्वेऽपि आचार्याः पूजितास्ताम्बूलदानेन भूभुजा। इदानीं युष्माकमागमनमवलोक्यते।' एतत् पुरोहितमुखादाकर्ण्य श्रीवर्द्धमानसूरयः श्रीसुधर्मस्वामि-जंबूस्वामिप्रभृतिचतुर्दशपूर्वधरान्

युगप्रधानानपरानपि सूरीन् विन्यस्य हृदयपुण्डरीके पण्डितश्रीजिनेश्वरप्रमुखकतिपयगीतार्थसुसाधुभिः सह प्रचलिताः पंचासरीयचैत्याभिमुखम्। कन्यागोशङ्खभेरीदधिफलपुष्पमालाद्यालोकमांगलिक्यरूपानुरूपसुशकुनदर्शनसंभाविताः संभाविताभिलाषितसिद्धयः प्राप्ताश्च तत्र। उपविष्टाः पंडितजिनेश्वरदत्तनिषद्यायां श्रीदुर्लभराजदर्शितस्थाने। पण्डितजिनेश्वरोऽपि गुरुणाऽनुज्ञातोऽवनतगात्रः स्वगुरुपादान्त एवोपविवेश।

§७) अत्रान्तरे नृपतिस्ताम्बूलदातुं प्रवृत्तः। ततः सभासमक्षमाचचक्षे भगवद्भिः श्रीवर्द्धमानाचार्यैः– 'महाराज! अस्मदागमे मुनीनां ताम्बूलभक्षणस्नानपुष्पमालागन्धनखकेशदशनादिसंस्कारादिकं निषिद्धमस्ति। ततः–

**संजमे सुट्ठियप्पाणं विप्पमुक्काण ताइणं। तेसिमेयमणाइन्नं निग्गंथाण महेसिणं॥**
**उद्देसियं कीयगडं नियागमभिहडाणि य। राइभत्ते सिणाणे य गंधमल्ले य वीयणे॥**
**सव्वमेयमणाइन्नं निग्गंथाण महेसिणं। संजमम्मि य जुत्ताणं लहुभूयविहारिणं॥**

इत्यागमं पठित्वा, यद् राजाग्रतो व्याख्यानार्हं तद् व्याख्यातं श्रीमदाचार्यैः।

राजा–'ताम्बूलभक्षणे को दोषः?'

आचार्याः–'कामरागवर्द्धनं ताम्बूलमिति जगद्विदितमेतत्। तथा च पठ्यते लोके–

**ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं**
**पित्तघ्नं कफनाशनं कृमिहरं दौर्गन्ध्यनिर्नाशनम्।**
**वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसंदीपनं**
**ताम्बूलस्य सखे त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः॥**

अतो ब्रह्मचारिणां तांबूलभक्षणं रागवृद्धिहेतुत्वादत्यन्तं दुष्टमेव। स्मृतावप्युक्तम्–

**ब्रह्मचारियतीनां च विधवानां च योषिताम्।**
**ताम्बूलभक्षणं विप्रा गोमांसान्न विशिष्यते॥**
**स्नानमुद्वर्तनाभ्यंगनखकेशादिसंस्क्रियाम्।**
**धूपं माल्यं च गन्धं च त्यजन्ति ब्रह्मचारिणः॥**

एतच्छ्रुत्वा विवेकप्रवेकलोकस्य जातो हृदये प्रमोदो गुरुषु बहुमानश्च। श्रीवर्द्धमानाचार्यैरुक्तम्– 'आचार्यैः सह विचारे प्रक्रान्तेऽस्मच्छिष्य एष पण्डितजिनेश्वरो यदुत्तरप्रत्युत्तरं प्रदास्यति तदस्माकं प्रमाणम्।' सर्वैरपि भणितमेवमस्तु।

§८) ततश्चतुरशीत्याचार्यघटागरिष्ठेन सूराचार्यचैत्यवासिना जल्पितम्, यथा–'शृण्वन्तु भोः! सर्वेऽपि क्षितिपतिमन्त्रिप्रभृतयो लोकाः! यदस्माभिरुच्यते।' मन्त्र्यादयस्तत्पाक्षिका वदन्ति–'वदन्तु भवन्तस्तिष्ठामो वयमेते श्रवणोर्ध्वीकृतश्रवणाः।'

राजा पुनस्तदानीं समस्तानपि तांश्चैत्यवास्याचार्यसाध्वाभासांश्च चकचकायमानोच्छ्रितसमीकृतनताविरलशिरःकुन्तलांस्ताम्बूलरसरञ्जितौष्ठपुटरदनान् बहलकौतूहलावलोकनाक्षिप्तमृगेक्षणानिरीचिक्षिपेतस्ततः क्षिप्तस्फारेक्षणेन हृष्टपुष्टाङ्गान् घृष्टालक्तकरसरक्तपादनखांस्तीक्ष्णीकृतनखशुक्तिकान्, सुरभिचम्पकतैलाभ्यक्तगात्रोच्छलद्बहलपरिमलान् पटवासधूपितपटावगुण्ठितान् वीक्ष्य, चिन्तयां चकार–अहो! सविलासचेष्टकायाः खल्वमी विटप्राया महामूढत्वेन व्यतिरिच्यन्ते नेष्टकायाः। पश्यतामी पुनर्महानुभावाः स्वभावानीचा अपि नीचासनोपविष्टाः समूलमूर्द्धजोन्मूलनावलोक्यमानासमासमारचिताविततस्वरपरुष-

धूसरोत्तमाङ्गकेशाः मलपटलविशदंशुकरदनदेहपादविपादिकाः दर्शनमात्रेणैवोपलभ्यमानशान्तताल्लिङ्गित-तपोनिष्ठमूर्त्तयः। निश्चितं ये केचन गुणरत्नालङ्कृतगात्रास्त्रिजगन्महनीयमहाशीलव्रतपात्राण्युच्यन्ते ते एते महाव्रतिनः—इत्येवं विमृशति क्षितीशे, अत्रान्तरे समुपन्यस्तं सूराचार्येण।

§ ९) यथा—'भो भोः वसतिपालाः! सावधानमनोभिः श्रूयतां युष्माभिः। जिनभवननिवास एवेदानींतनमुनीनां समुचितः, तत्रैव निरपवादब्रह्मव्रतस्य संभवात्। यतीनां च तदेव गवेष्यते। न च शेषव्रतानामिव तत्रापि सापवादत्वमस्तीति वाच्यम्। सिद्धान्तेऽस्य सर्वव्रतेषु निरपवादत्वेनैव प्रतिपादनात्। तथा चोक्तम्—

**नवि किंचि अणुन्नायं पडिसिद्धं वावि जिणवरिंदेहि। मुत्तुं मेहुणभावं न तं विणा रागदोसेहिं॥**

वसतिवासे तु युवतीजनमनोहारिशब्दश्रवणादेर्न ब्रह्मव्रतं सम्यग् निर्वोढुं पार्यते, उत्कलिकादिप्रादुर्भावात्। तथा हि—नितम्बिनीनां कोकिलाकलकूजितं गीतादिरवमधरितरतिसौन्दर्यं च रूपमुपलभ्य भुक्तभोगानां यतीनां पूर्वानुभूतनिधुवनविलसितप्रतिसन्धानादयः, अभुक्तभोगानां च तत्कुतूहलादयः प्रादुर्भवेयुः। यतीनां च सततं कर्णपीयूषवर्षिविशदगम्भीरमधुरस्वाध्यायध्वानं निशम्य केषांचित्तु शरीरागण्यलावण्यश्रियं निर्वर्ण्य प्रोषितपतिकादीनां तरुणीनां रिरंसादयः प्रादुष्युः। एवं चान्योऽन्यं निरन्तररूपावलोकनगीतश्रवणादिभिर्दुर्मथमन्मथदोःस्थ्याच्चारित्रमोषादयोऽनेके दोषाः पुष्येयुः। यथोक्तम्—

**थीवज्जियं वियाणह इत्थीणं ठाण जत्थ रूवाणि।**
**सद्दा य न सुव्वंती तावि य तेसिं न पिच्छंति॥**
**बंभवयस्स अगुत्ती लज्जानासो य पीइवुड्ढी य।**
**साहुतवोधणनासो निवारणा तित्थपरिहाणी॥**

लौकिका अप्याहुः—

**शृणु हृदय रहस्यं यत्प्रशस्यं मुनीनां न खलु न खलु योषित्सन्निधिः संविधेयः।**
**हरति हि हरिणाक्षी क्षिप्रमक्षिक्षुरप्रप्रहतशमतनुत्रं चित्रमप्युन्नतानाम्॥**

जिनगृहवासे तु न तथा निरन्तरस्त्रीसंसक्तिसंभवः। कदाचिच्चैत्यवन्दनार्थमेव क्षणमागत्य गन्त्रीणां श्राविकादीनां यतिभिः सह तथाविधप्रसंगानुपपत्तेः। तस्मात् प्राणातिपातादिवदनेकदोषदुष्टत्वेन परगृहनिवासत्वेऽनुपपन्ने सति जिनगृहवास एवाधुनिकसाधूनां सांगत्यं निस्तीर्यात्ति। तथा हि, ऐदंयुगीनां जिनगृहवासमन्तरेणोद्यानवासो वा स्यात् परगृहवासो वा स्यादिति विकल्पयुगलकमुदयपदवीमासादयति। तत्र द्वितीयविकल्पः समुत्पन्नः किल दासेरक इव प्रथमत एव निर्वैरपदप्रहारजर्जरीकृताङ्गत्वेन नोत्थातुमुत्सहते। प्रथमोद्यानपक्षोऽप्यसपक्ष इव नास्मत्पक्षविक्षेपदक्षतामुपक्षिपति। स्त्रीसंसक्त्याद्याधाकर्मिकादिदोषकलाकलितत्वात्। तथा हि—उद्यानेऽपि निवसतां यतीनां नूतनचूताङ्कुरास्वादकूजत्कलकण्ठपञ्चमोद्गारेणोन्मीलद्बहलविचिकिलबकुलमालतीपरिमलेन च तन्तन्यते समाहितचेतसामप्युत्कलिकोल्लासः। पञ्चमोद्गारादीनामुद्दीपनविभावत्वेन भरतादिशास्त्रेऽभिधानात्। तथा, चिक्रीडिषागतकामुककामिनीसंकुलत्वेन स्त्रीसंसक्त्यादौ पुनः किं ब्रूमहे। अथ वा नवनवतरशास्त्राभ्यासपरावर्तनपराणां यतीनां मा भूवन्नेतज्जन्या दोषाः, तथापि लोकसंचारशून्योद्यानभूमौ वसतां सतां चौरचरटभटादिभिर्वस्त्रपात्राद्युपकरणापहारस्यापि संभवः। तदपहारे च शरीरसंयमविराधनाप्रसङ्गः। अथ **'समोसढा उज्जाणे भयवंतो जुगंधरायरिया।'** तथा **'ठिओ भयवं वइरसामी उज्जाणे'** इत्याद्यनेकधोद्यानवासः श्रूयत इति चेत्, सत्यम्; सोऽनाधातासंलोकगुप्तैकद्वारोद्यानविषयः। तस्य च प्रायेण कलिकाले लोकस्य राजतस्करचरटाद्यु-

पश्चैर्वाधितत्वेन दौःस्थ्यादसंभव एव—इत्युद्यानवासः कथमधुनातनमुनीनां कल्प्यमानः शोभेत। तस्मादिदानीं जिनगृहवास एव साधूनां संगतः प्रतिभाति। न च तत्राधाकर्मिकादयो दोषाः। तथा च प्रयोगः—चैत्यमिदानींतनमुनीनामुपभोगयोग्यम्, आधाकर्मादिदोषरहितत्वात् तथाविधाहारवत्। न चायमसिद्धो हेतुः, जिनप्रतिमार्थं निष्पादिते आयतने आधाकर्मादिदोषानवकाशात्। यत्यर्थं क्रियमाणे हि तस्मिन्नाधाकर्मादिदोषः प्रादुर्भवेत्। किं च यतीनां चैत्यनिवासमन्तरेण सांप्रतिकजिनभवनानां हानिः स्यात्। तथा हि—पूर्वं कालानुभावादेव श्रीमन्तोऽव्यग्रचेतसो देवगुरुतत्त्वप्रतिपत्तिभरनिर्भरतयैतदेव परं तत्त्वमिति मन्यमानाः श्रावकाः परमादरेण चैत्यचिन्तामकरिष्यत्। सांप्रतं तु दुःषमादोषान्नक्तंदिवं कुटुम्बसम्बल-चिन्तातापजर्जरितचित्ततयेतस्ततो धावतां प्रायेण दुर्गतानां श्राद्धानां स्वभवनेऽप्यागमनं दुर्लभम्, आस्तां जिनमन्दिरे। तथा च कुतस्त्या तत्समारचनादिचिन्ता तेषाम्। श्रीमतां तु प्रतिकलं मदालसवारविलासिनी-घनसारशबलमलयजरसपंकिलपीनकुचकलशपीडनदुर्ललितानां निरन्तरमेव भूरिभूरि लिप्सया पार्थिवसेवा-हेवाकिनां जिनगृहावलोकनमेव न संपद्यते, दूरे तच्चिन्ता। तदभावे च जिनसदनानां विशरारुता स्यात्; तथा च तीर्थोच्छित्तिरापनीपद्यते। चैत्यान्तर्निवासे तु यतीनां तदुद्यमे च भूरि कालं जिनभवनान्यव-तिष्ठेरन्; तथा च तीर्थाव्यवच्छेदः। तदव्यवच्छित्तिहेतोश्च किञ्चिदपवादासेवनस्यागमेऽपि समर्थनात्। यदाह—"जो जेण गुणेण हिओ जेण विणा वा न सिज्झए जं तु" इत्यादि। तदेवं सूक्ष्मेक्षिकया विमृशतां विदुषां चेतसि चैत्यवास एवेदानीं संगतिमङ्गतीति।'

§११) इत्यादि सूराचार्योपन्यस्तं समस्तमपि स्वहृदयेऽवधार्य, ततो 'भाविनि भूतवदुपचार' इति न्यायादुक्तं समुत्कटप्रावादुककरटिकरटतटपाटनपटिष्ठनिष्ठुरप्रकोष्ठकेसरसटाभारभासुरकेसरिणा भगवता श्रीजिनेश्वरसूरिणा। यथा—'भो भोः सभासदः! सदैव सर्वत्र यमलजननीप्रतिमामलहृदः किंचिद्-युक्तायुक्तविचारविषयमुपन्यस्यमानं प्रेक्षापूर्वकारिणो मात्सर्यमुत्सार्य माध्यस्थ्यमास्थाय सावधानीभूय शृण्वन्तु भवन्तः सन्तः। तत्र 'जिनभवननिवास एवेदानींतनमुनीनां समुचितस्तत्र निरपवादब्रह्मव्रतस्य संभवाद्, यतीनां च तदेव गवेष्यत' इत्यादिना, 'बंभवयस्स अगुत्ती' इत्याद्यन्तेन यद् यतीनां परगृह-वसतिदूषणं बभाषे भवता भवतापहारिहारिशीलशालिना; तदिदानीं विकल्पपूर्वकं विचार्यते। तथा हि—यदियं परगृहवसतिः दूष्यते भवता यतीनां तत् किं सर्वदा उत इदानीमेव? यद्याद्यः पक्षः, तदानीमुद्यानादिषु वसतां यतीनां कथंचिच्चौराद्युपद्रवात् कथं प्रतीकारः स्यात्? । न च तदानीं कालसौस्थ्येन चौराद्युपसर्गाभावात् उद्यानवास एव यतीनां श्रूयते न परगृहवास इति वाच्यम्। तदापि तस्कराद्युपद्रव-स्यानेकधाऽऽकर्णनात्। तथा तस्मिन्नपि काले मुनीनां परागाराश्रयस्यागमेऽभिधानाच्च। यदुक्तम्—

> बाहिरगामे वुत्था उज्जाणे ठाणवसहिपडिलेहा। इहरा उ गहियभंडा वसहीवाघायउड्डाहो॥
> सव्वे विय हिंडंता वसहिं मग्गंति जह उ समुदाणं। लद्धे संकलियनिवेयणं तु तत्थेव उ नियट्टे॥

तथा वृषभकल्पनया स्थापिते ग्रामादौ यतीनां वसतिगवेषणचिन्तायामुक्तम्—

> नयराइएसु घिप्पइ वसही पुव्वामुहं ठविय वसहं। वामकडीइ निविट्ठं दीहीकयअग्गिमिक्कपयं॥
> सिंगक्खोडे कलहो ठाणं पुण नत्थि होइ चलणेसु। अहिठाणे पुट्टरोगो पुच्छम्मि य फेडणं जाण॥
> मुहमूलम्मि य चारी सिरे य ककुहे य पूयसक्कारो। खंधे पट्टीइ भरो पुट्टम्मि य धायउ वसहो॥

न चैवंविधा वसतिर्ग्रामादिमध्यमन्तरेण संभवति। उद्यानवासे एव च तदानीमभिमते प्रतिपद-मुक्तन्यायेन ग्रामाद्यन्तर्वसतिनिरूपणा नोपपद्येत। एवं च तदानीमपि परगृहवसतेर्यतीनां भावान्न प्रथमः पक्षः।

अथ द्वितीयपक्षः कक्षीक्रियते। अत्रापि पृच्छामः — कुतो दोषादधुनैव यतीनां परगृहवासो दूष्यते? 'स्त्रीसंसक्त्यादे'रिति चेत् न, 'अस्य दोषस्य तदानीमपि भावात्। न च तदापि तत्संसक्तिरहितवसतिपरिग्रहे तदलाभे वाऽभिहितयतनां विहायान्यः समाधिः। तथा च स इदानीमप्याश्रीयताम्, न्यायस्य समानत्वात्। एवं च उक्तयतनाविधायिनां स्त्र्यादिसंसक्तवसताविदानीमपि ब्रह्मचर्यगुप्त्यादयो दोषाः परास्ताः। यदपि 'तस्मादिदानीं जिनगृहवास एव साधूनां संगतः प्रतिभाती'त्यादि, 'यत्यर्थे क्रियमाणे हि तस्मिन्नाधाकर्मादिदोषः प्रादुर्भवेद्' इत्यन्तमुक्तम्, तदप्यधिकतरदोषकवलितत्वेन चौरचरटत्रासोल्लासात् पलायमानस्यात्यन्तरौद्राकारसमग्रसनरसिकरसनापिशाचाक्रान्तविकटाटवीसंकटनिपातकल्पनामुपकल्पयति। तथा हि, परगृहे कदाचिदाधाकर्माङ्गनासंसक्तिप्रभृतिदोषदर्शनात् तत्त्यागेन जिनसदनान्तर्निवसतां सतां शीलधनवतां साधूनां प्रत्यहं भगवत्पुरतः स्फारशृङ्गारोदाररम्भातिलोत्तमावतारतारमधुरस्वरगायन्नृत्यद्वारविलासिनीसाङ्गभङ्गसानङ्गापाङ्गनिरीक्षणक्षणदाकराकरवदनकुन्दकलिकाविशदरदनमसृणपङ्काहीनपीनस्तनघटपृथुलश्रोणीतटप्रलोकनादिवातसंधुक्षणेनेदानीं तथाविधसत्त्वविवेकविकलप्रेक्ष्यादिमुनीनां कथं सातिरेका मन्मथविकाराङ्गारा न दीप्येरन्? ततश्चेदमुपस्थितम् —

**यत्रोभयोः समो दोषः परिहारश्च तादृशः। नैकपर्यनुयोज्यः स्यात् तादृग्यार्थविचारणे॥**

प्रत्युतायं विशेषोऽस्मत्पक्षे स्त्रीसंसक्तपरगृहे कदाचिद् वसतामप्युक्तदोषासंभवः, तत्र यतनाभिधानात्। भवत्पक्षे तु चैत्यवासस्य सर्वथा वर्जनीयत्वेन क्वचिदपि यतनाऽनभिधानादेतद्दोषपोषः केन वार्यते। न च वक्तव्यं गृहिगृहाणां संकीर्णत्वाद् यतनाकरणेऽपि नोक्तदोषमोषः कर्तुं शक्यत इति। प्रमाणयुक्तस्यैव गृहिमन्दिरस्य प्रायेण यत्याश्रयणीयत्वेनाभिधानात्, तत्र चोक्तदोषपरिहारस्य सुशकत्वात्। अतएव गृहिणा सकलगृहसमर्पणेऽपि यतीनां तस्यान्यस्य वा दौर्मनस्यनिरासाय मितावग्रहाध्यासनं सूत्रे प्रत्यपादि। यदुक्तम् —

> **एवमम्ह वि जं जोग्गं तं देयं जइ भणिज्ज इय भणिओ।**
> **चुल्ली खट्टा य ममं सेसमणुन्नाया तुब्भ मए॥**
> **अणुन्नाए वि सव्वम्मि उग्गहे घरसामिणा।**
> **तहावि सीमं छंदंति साहू तप्पियकारिणो॥**
> **ठाणट्ठा य भायणधोवणट्ठा दुण्हट्ठया अत्थणहेउयं वा।**
> **मिउग्गहं चेव अहिट्ठयंति मासो व अन्नो व करिज्ज मत्तुं ति॥**

प्रमाणयुक्तपरगृहालाभे तु संकीर्णेऽपि तस्मिन् यतनया वसतां न दोषः। यदुक्तम् —

**नत्थि उ पमाणजुत्ता खुड्डलियाए वसंति जयणाए त्ति।**

किं च जिनगृहवाससमर्थनमात्मनो महानर्थकारित्वान्न चारिमाणमञ्चति। सिद्धान्ते चैत्यान्तर्वासस्य मुनीनामत्यन्ताशातनाहेतुत्वेनोक्तत्वात्। तस्याश्चाल्पीयस्या अप्यनन्तभवामयवृद्धिकारणत्वेनापथ्यासेवनतुल्यत्वात्। तथा चागमः —

**दुब्भिगंधमलस्सावि तणुरप्पेस अण्हाणिया। उभओ वाहओ चेव तेण ठंति न चेइए॥**
**जइ वि न आहाकम्मं भत्तिकयं तह वि वज्जियं तेहिं। भत्ती खलु होइ कह इहरा आसायणा परमा॥**
**आसायणमिच्छत्तं आसायणवज्जणा य सम्मत्तं। आसायणा निमित्तं कुव्वइ दीहं च संसारं॥**

तस्मात् कथंचिदाधाकर्मिकवसतिनिवासस्यापि सिद्धान्ते प्रतिपादितत्वात्, जिनभवननिवासस्य चात्यन्तदूषितत्वाद् वसतिवासः साधूनामुपपन्न इति। तथा च प्रयोगः — यतीनां परगृहवासो विधेयः, निःसंगताऽभिव्यञ्जकत्वात्, शुद्धोञ्छग्रहणावदिति। तथा, यदपि च, 'किं च चैत्यवासमन्तरेणे'त्यादिना तथा

च 'तीर्थाव्यवच्छेद' इत्यन्तेन तीर्थाव्यवच्छित्त्या चैत्यवासप्रतिष्ठापनम्' तदपि विचारभारगौरवाक्षमत्वात् केवलं मुग्धलोकविप्रतारणमेव । यतः केयं तीर्थाव्यवच्छित्तिः ? किं यतीनां चैत्यान्तर्वासेन भगवद्देवगृह-बिम्बाद्यनुवृत्तिः ? आहोस्वित् शिष्यप्रतिशिष्यपारंपर्येणाविच्छिन्नप्रसरा सम्यग्ज्ञानदर्शनचारित्रप्रवृत्तिः ? न तावदाद्यः, चैत्यवासमन्तरेणापि भगवद्बिम्बाद्यनुवृत्तिमात्रदर्शनात् । तथा हि – पूर्वदेशेऽद्यापि तादृक्प्राकृत-लोकेन कुलदेवताबुद्ध्या नमसितकीकृता । अपेयाभक्ष्यादिनाऽपि नमस्यमानानां जिनबिम्बानामनेक-धोपलब्धेः, अन्यतीर्थिकपरिगृहीतानां च तेषां तथैवानुवृत्त्युपलम्भाच्च । तथा चैतावतैव भवदभिमत-तीर्थाव्यवच्छित्तिसिद्धेः किं निःफलेन चैत्यवाससंरम्भेण ? । न चैतावता तीर्थाव्यवच्छेदकार्यम निःश्रेयसादिफलसिद्धिः, मिथ्यादृष्टिपरिगृहीतानां प्रतिमानां मोक्षमार्गानङ्गत्वेनाभिधानात् । 'मिच्छदिट्ठि-परिग्गहियाओ पडिमाओ भावगामो न हुंति त्ति' वचनात् ।

अथ द्वितीयः [वि]कल्पस्तर्हि सैव तीर्थाव्यवच्छित्तिरभ्युपेयतां मोक्षमार्गत्वात्, किं तदनुगुणोत्सूत्र-चैत्यवासाश्रयणेन ? यदुक्तम् –

'सीसो सज्झिलगो वा गणिच्चओ वा न सुग्गइं निंति । जत्थेयँ नाणदंसणचरणा ते सुग्गईमग्गो ॥'

सम्यग्ज्ञानदर्शनचारित्रानुवृत्तिं विना च जिनगृहबिम्बसद्भावेऽपि तीर्थोच्छित्तिः । अत एव जिनान्तरेषु केषुचिद् रत्नत्रयविरहात् क्वापि जिनबिम्बसम्भवेऽपि तीर्थोच्छेदः प्रत्यपादि । स्वमतिकल्पिता चेयं प्रकृता तीर्थव्यवच्छित्तिरागमविसंवादित्वाद्धेयैव । यदाह –

'न य समयवियप्पेणं जहा तहा कयमिणं फलं देइ ।
अविआगमाणुवाया रोगतिगिच्छाविहाणं व ॥'

किं च भवतु जिनगृहाद्यनुवृत्तिस्तीर्थाव्यवच्छित्तिः, तथापि न यतिचैत्यवास-जिनगृहाद्यनुवृत्त्योः श्यामत्व-मैत्रतनयत्वयोरिव प्रयोज्य-प्रयोजकभावः । तथा हि – श्यामो देवदत्तो मैत्रतनयत्वात्; न चात्र श्यामत्वे मैत्रतनयत्वं प्रयोजकम्, किं तु शाकाद्याहारपरिणतिलक्षण उपाधिः । एवं न यतिचैत्यान्तर्वास-प्रयुक्ता तदनुवृत्तिस्तदन्तर्वसद्भिरपि यतिभिः सातशीलतया तच्छीर्णजीर्णोद्धारादिचिन्तामकुर्वाणैस्तदनुवृत्तेर-नुपपत्तेः; किं तु तच्चिन्ताप्रयुक्ता तदनुवृत्तिः । तां च श्राद्धैरेव कुर्वद्भिस्तदनुवृत्तिः कथं न स्यात् ? । न चोक्तन्यायेन श्राद्धानां दुर्गतानां श्रीमतां चेदानीं तच्चिन्ताकरणासंभव इति वाच्यम् । दुःषमादोषात् केषांचित् तथात्वेऽप्यन्येषां महात्मनां शुद्धश्रद्धाबन्धुराणां तत्संभवात् । तथा हि – दृश्यन्त एव संप्रत्यपि केचन पुण्यभाजः श्रावकाः स्वकुटुम्बभाराटोपं [स]क्षमतनयेषु निक्षिप्य जिनगृहादिचिन्तामेव सततं विदधानाः । अतस्तैरेवानुवृत्तिहेतुतच्चिन्तासिद्धेः किमिदानींतना भवादृशा अपि सूरयश्चैत्यापदेशादने-कानारम्भानारभमाणा मुधैव क्लिश्यन्त इति । यदि 'जो जेणे'त्यादिना तीर्थानुच्छित्तिहेतोरपवादासेवनेन चैत्यवासस्थापनम्, तदप्यविदितसिद्धान्ताभिप्रायतां भवतः प्रकटयति । अस्यान्यार्थत्वात् । अत्र हि यः कश्चिद् यत्यादिर्येन ज्ञानादिना गुणेनाधिको येन च विना यत्संघादिकार्यं महत्तमं न सिध्यति, तेन तत्र स्वगुणवीर्यस्फोरणं विधेयमित्ययमर्थः । तथा हि – एतदुत्तरार्द्धमेवं स्थितं 'सो तेण तम्मि कज्जे सव्वत्थामं न हावेइ' इति । अतो नैतस्मादपि भवदभिप्रेतसिद्धिः ।

§१२) एवं च समस्तपरोपन्यस्तोपपत्तिनिराकरणाद् यतीनां जिनभवननिवासनिषेधसिद्धौ स्वपक्षे साधनमभिधीयते । जिनगृहवासो मुनीनामनुचितः, आयमानदेवद्रव्योपभोगादिमत्त्वात् । प्रतिमापुरतो

भक्तवितीर्णबलिग्रहणवत् । न चायमसिद्धो हेतुः । तत्र संवसतां देवद्रव्योपभोगस्य शयनासनभोजनादि-करणेनानेकजन्मदारुणविपाकस्यावश्यंभावित्वात् । नापि विरुद्धः, हेतोर्मुनियोग्यताया व्याप्यत्वे हि स स्यात्, न चैवमस्ति ।

'देवस्स परीभोगो अणंतजम्मेसु दारुणविवागो । जं देवभोगभूमिसु वुड्ढी न हु वट्टइ चरित्ते ॥'

इति सिद्धान्तेन देवभूमिभुञ्जानस्य यतेश्चारित्राभावेन विपाकदारुणत्वस्य प्रतिपादितत्वात् । नापि सत्प्रतिपक्षः । आगमोक्तत्वादिप्रतिबलानुमानस्य प्रागेव निरस्तत्वात् । नापि बाधितविषयः । प्रत्यक्षादिभिरनपहृतविषयत्वात् । न च प्रत्यक्षेणैव संप्रति जिनगृहे वासदर्शने तद्वासस्य धर्मिणो मुन्य-योग्यतायाः साध्यधर्मस्य हेतुविषयस्य बाधितत्वेन विषयापहारात् कथं न हेतुर्बाधितविषय इति वाच्यम् । तेषां मुन्याभासत्वेन तत्र तद्वासदर्शनेनापि न तद्वासस्य मुन्ययोगताया बाधितत्वमिति हेतो-र्विषयापहाराभावात् न बाधितविषयत्वमिति । ततश्चेत्यं मुनीनामुपभोगयोग्यम्, आधाकर्मादिदोषरहित-त्वात्—इति भावको हेतुरुक्तन्यायेन मुनीनां चैत्योपभोगयोग्यताया देवद्रव्योपभोगादिदोषैरागमे बाधित-त्वात् कालात्ययापदिष्टः । एवं च सति भगवद्गुणगायन-पण्यस्त्रीनर्तन-शङ्खपटहभेरीमृदङ्गाद्यातोद्यवादन-बकुलविचिकिलमालतीप्रमुखामोदितसकलजिनभवनमालापूजाविच्छित्तिविरचनादिभक्त्यर्हद्भवने देवद्रव्यो-पभोगात् ।

यदीच्छेन्नरकं गन्तुं सपुत्रपशुबान्धवः । देवेष्वधिकृतिं कुर्याद् गोषु च ब्राह्मणेषु च ॥
तथा—नरकाय मतिस्ते चेत् पौरोहित्यं समाचर । वर्षं यावत् किमन्येन माठपत्यं दिनत्रयम् ॥

इत्यादिप्रकारेण लोकनिन्दितात् माठपत्यात् दीर्घसंसारकार्योशातनातश्च कम्पमानाः साधवो जिनमत-निष्णाताः कथंचिन्न संवसन्ति । किं तु—

'ताहे सामी वासावासे उवागए तं चेव दूइज्जंतगगामं एइ । तत्थेगम्मि उडए वासावासं ठिओ ।'

तथा—'ताहे सामी रायगिहं गओ तत्थ बाहिरियाए तंतुवायग्गहसालाए एगदिसिं अहापडिरूवं अणुणवित्ता चिट्ठइ ।'

तथा—'अन्नया आयरिया मज्झण्हे साहुसु भिक्खं निग्गएसु सन्नाभूमिं गया वइरसामी वि पडिस्सयवालो त्ति ।'

इत्यादि आवश्यक-चूर्ण्यादिग्रन्थेषु बहुशो दर्शनात्; साक्षादेव तीर्थकृद्गणधरनिषेवितायाम्;

'संविग्गसण्णिभद्दग सुत्ते नीयाइ मुत्तऽहाछंदे । वचंतस्स पसु(?)वसहीपमग्गणा होइ ।'
इत्यादिना सप्रपञ्चं जिनादिभिरनेकधा प्रतिपादितायाम्; तथा—

'धन्या अमी महात्मानो निःसंगा मुनिपुंगवाः ।
अपि क्वापि स्वकं नास्ति येषां तृणकुटीरकम् ॥'

इत्यादिवचनसंदर्भलोकप्रशस्यधनकनकतनयवनितास्वजनपरिजनत्यागरूपपरिग्रहतामुख्यास्पदभूतायाम्;

तथा—सिज्जायरु त्ति भन्नइ आलयसामि त्ति ।'
तथा—'सिज्जायरो पहू वा पहुसंदिट्ठो न होइ कायव्वो ।'
तथा—मुत्तूण गेहं तु सपुत्तदारो वाणिज्जमाईहि कारणेहिं ।
सयं व········ चइज्ज देसं सिज्जायरो तत्थ स एव होइ ॥

तथा – जो देइ उवस्सयं मुणिवराण तवनियमबंभजुत्ताण ।
तेणं दिन्ना वत्थन्नपाणसयणासणविगप्पा ॥

इत्यादि-बहुधासिद्धान्ताक्षरदर्शनसंजाततात्त्विकावबोधबुधजनबहुमतायां वसतावेव सत्याभिधेयानगार-नामधेयाः साधवोऽवस्थानमाबध्नते, न त्वत्यन्तापवादेऽपि जिनसद्मनीति स्थितम् । इत्थमुपन्यासप्रबन्धे-नोत्तरीकृतशून्यदिक्चक्रतारतरलावलोकनसूराचार्यं विधाय, ऊर्ध्वीकृतभुजदण्डेनोक्तं भगवता कदध्वध्वा-न्तध्वंसनभास्करेण श्रीजिनेश्वरसूरिणा । यथा –

एवं सिद्धान्तवाक्यैर्बहुविधघटनाहेतुदृष्टान्तयुक्तै-
रुक्तैरस्माभिरेतैरवितथसुपथोद्भासनोष्णांशुकल्पैः ।
कुग्राहग्रस्तचेताः परगृहवसतिं द्वेष्टि योऽसौ निकृष्टो
दुर्माषी बद्धवैरः कथमपि न सतां स्यान्मतो नष्टकर्णः ॥

§ १३ ) इति तार्किकसभासचक्रमानम्य, राजादिलोकप्रत्यायनार्थं भूयोऽप्यभिदधे श्रीजिनेश्वरसूरिणा – 'महाराज ! युष्माकं लोके किं पूर्वपुरुषदर्शिता नीतिः प्रवर्तते, उताधुनिकपुरुषदर्शिता नूतना ?' राज्ञोक्तम् – 'अस्मद्देशे समस्तेऽपि पूर्वजवणराजनीतिः प्रवर्तते नान्या ।' श्रीजिनेश्वरसूरिणोक्तम् – 'महाराज ! अस्माकमपि मते गणधरैश्चतुर्दशपूर्वधरैश्च यो मार्गो दर्शितः स एव प्रमाणीक्रियते, नान्यः ।' राज्ञोक्तम् – 'इत्थमेवैतत्, पूर्वपुरुषव्यवस्थापित एव पन्थाः सर्वत्र प्रमाणपदवीमध्यास्ते ।' जिनेश्वरसूरिणोक्तम् – 'महाराज ! वयं दूरदेशादागताः, पूर्वपुरुषविरचितस्वसिद्धान्तपुस्तकानि न कानिचिदानीतानि । तदेतेषां मठेभ्यो महाराज ! यूयमानाययत पूर्वपुरुषविरचितसिद्धान्तपुस्तकगंडलकम्, येन युष्माकं प्रत्यक्षं सन्मार्ग-निश्चयाक्षराणि दर्शयामः ।' ततो राज्ञोक्तम् – 'अहो ! युक्तमेते वदन्ति; भो भोः श्वेताम्बरसूरयः ! स्वकीयं श्वेताम्बरमेकं प्रेषयत पुस्तकदर्शनार्थं येन मदीयपुरुषा आनयन्ति ।'

तत एतेषामेव पक्षस्तेष्वपि भविष्यतीति निश्चिन्वन्तः, श्रीजिनेश्वरसूरिवाग्भल्लिशल्यितान्तर्हृदया इवात्तनिशितवचनशस्त्रास्तूष्णींभूय स्थिताः सर्वेऽप्याचार्याः । राजपुरुषैस्तु गत्वा यत् प्रथमत एव हस्ते चटितं तदेवानीतं शीघ्रं पुस्तकगंडलकम् । आनीतमात्रमेव छोटितम् । तत्र श्रीदेवगुरुप्रसादाद् दशवैकालिकं चतुर्दशपूर्वधरविरचितं निर्गतम् । तत्र च प्रथममेवायं निर्जगाम श्लोको यथा –

'अन्नट्ठं पगडं लेणं भएज्ज सयणासणं । उच्चारभूमिसंपन्नं इत्थीपसुविवज्जियं ॥'

श्रीजिनेश्वरसूरिणोक्तम् – 'एवंविधे परगृहे वसन्ति साधवो न देवगृहे ।' श्रीदुर्लभराजचित्तेऽतीव लग्नम्, भणितं च – 'अहो ! यथा वदन्त्येते तथैवैतत् ।' सर्वैरप्यधिकारिभिर्ज्ञातं यदुत निरुत्तरीभूताः सर्वथाऽसद्गुरवः । ततः सर्वेऽधिकारिणो वदन्ति श्रीकरणिकप्रभृतयः प्रत्येकम् – देव ! एते अस्माकं गुरवः, एते अस्माकं गुरवः – इति । येन राजाऽसत्कारणेनाऽसद्गुरूनपि बहु मन्यते । राजा च न्यायवादी यावन्न किंचिज्जल्पति ।

§ १४ ) अत्र प्रस्तावे भणितं विचक्षणशिरोमणिना श्रीजिनेश्वरसूरिणा – 'महाराज ! कश्चिद्गुरुः श्रीकरणाधिकारिणः, कश्चिन्मांडपिकाधिकारिणः, कश्चिन्मन्त्रिणः, कश्चिच्छ्रेष्ठिनः समभूत् । महाराज ! या नष्टिः ( ? धिष्टिः, प्र० ) सा कस्य सत्का भवति ?' राज्ञोक्तम् – 'मदीया' । जिनेश्वरसूरिणोक्तम् – 'तर्हि महाराज ! कोऽपि कस्यापि सम्बन्धी जातो वयं न कस्यापि ।' ततो राज्ञा आत्मसम्बन्धिनो गुरवः कृताः ।

ततो महाराजेनोक्तम्—'सर्वेषां गुरूणां सप्त सप्त गब्दिका रत्नपटीनिर्मिताः, किमित्यस्मद्गुरूणां नीचैरासने उपवेसनम्? किमस्माकं गब्दिका न सन्ति? ।' ततो जिनेश्वरसूरिणोक्तम्—'महाराज! साधूनां गब्दिकोपवेशनं न कल्पते ।' राजा—'किमिति?' श्रीजिनेश्वरसूरिः—'महाराज! शृणु—

> भवति नियतमत्रासंयमः स्याद्विभूषा नृपतिककुद! एतल्लोकहासश्च भिक्षोः ।
> स्फुटतर इह सङ्गः सातशीलत्वमुच्चैरिति न खलु मुमुक्षोः सङ्गतं गब्दिकादि ॥

इति वृत्तार्थो व्याख्यातः । राज्ञोक्तम्—'कुत्र यूयं निवसत?' सूरिणोक्तम्—'महाराज! विरोधि-रुद्धत्वात् कथं स्थानम्?' राज्ञोक्तम्—'अहो अमात्य! अस्ति करडिहट्टिकामध्ये बृहत्तरमपुत्रगृहम्, तद्दापयितव्यमेषाम् ।' तत्क्षणादेव लब्धम् । भूयोऽपि पृच्छति महाराजः—'भोजनं केन विधिना भवताम्?' अत्रान्तरे पुरोहितः—'देव किमेषां महात्मनां वयं ब्रूमहे ।

> 'लभ्यते लभ्यते साधु साधु वै यत्र लभ्यते ।
> अलब्धे तपसो वृद्धिर्लब्धे देहस्य धारणम् ॥'

अतः कदाचिदर्द्धोदरपरिपूर्तिः कदाचिदुपवसनमेतेषाम् । राजा सानन्दं सविषादं च—'यूयं कति साधवः स्थ? ।' पुरोहितः—'देव! सर्वेऽप्यमी अष्टादश ।' राजा—'एकहस्तिपिण्डेन सर्वेऽपि तृप्ता भविष्यन्ति ।' ततो भणितं जिनेश्वरसूरिणा—'महाराज! राजपिण्डो न कल्पते मुनीनामिति पूर्वमेव सिद्धान्तपठनपूर्वकं प्रतिपादितं युष्माकं पुरतः ।' ततोऽहो! निःस्पृहत्वममीषां मुनीनामित्युत्पन्ना प्रीतिः । ततो तेन राज्ञा मत्यगादि—'तर्हि मदीयमानुषेऽग्रतः स्थिते सुलभा भिक्षा भविष्यति ।'

किं बहुना?—इत्थं वादं कृत्वा विपक्षान् निर्जित्य, राजामात्यश्रेष्ठिसार्थवाहप्रभृतिपुरप्रधानपुरुषैः सह भट्टघट्टेषु वसतिमार्गप्रकाशनयशःपताकायमानकाव्यबन्धान् दुर्जनजनकर्णशूलान् साटोपं पठत्सु सत्सु, प्रविष्टा वसतौ भगवन्तः श्रीजिनेश्वरसूरयः । एवं गूर्जरत्रादेशे श्रीजिनेश्वरसूरिणा प्रथमं चक्रे चक्रमूर्द्धसु पादमारोप्य वसतिस्थापनेति ।

§ १५) द्वितीयदिने विपक्षैरचिन्ति—जज्ञे तावन्निरर्थकमुपायद्वितयम् । इदानीमन्य एवैतन्निष्काशनोपायः कश्चिन्मृग्यते । पट्टराज्ञीप्रियोऽयं नृपः, यत् सा भणति तत् करोति, तद्द्वारेणैते निष्काश्यन्ते इति स्वाभिप्रायस्तैः स्वकीयाधिकारिश्रावकेभ्यो निवेदितः । ततस्ते आम्रकदलीफलद्राक्षादिफलभाजनानि प्रधानवस्त्राण्याभरणानि च प्राभृतं गृहीत्वा गता राज्ञीसमीपे । तस्या अग्रेऽर्हत्प्रतिमाया इव पुरो बलिविरचनं चक्रे । राज्ञी तुष्टा तत्प्रयोजनविधानाभिमुखी बभूव । अत्रान्तरे राज्ञः किञ्चिद् राज्ञीसविधे प्रयोजनमुपस्थितम् । ततो ढिल्लिकादेशसम्बन्धी पुरुष आदेशकारी राज्ञा तत्र प्रेषितो यदुतेदं प्रयोजनं राज्यै निवेदय । 'देव! इदानीं निवेदयामी'त्युक्त्वा शीघ्रं गतः । राजप्रयोजनं निवेदितं राज्यै । प्रभूतानधिकारिणो नानाढौकनिकाश्चावलोक्य तेन चिन्तितम्—ये मम देशादागता आचार्यास्तेषां निःसारणोपाय एष संभाव्यते । परं मयापि स्वदेशागताचार्याणां पक्षस्य पोषकं राज्ञः पुरो भणनीयम् । गतस्तत्र । 'प्रयोजनं निवेदितं भवताम् । परं देव! बृहत्कौतुकं तत्रगतेन दृष्टम् ।' राजा—'कीदृशं भद्र!' 'देव! राज्ञी जिनवरबिम्बाकृतिर्जाता । यथार्हदग्रे बलिविरचनं क्रियते एवं राज्या अग्रे कैश्चित् कृतम् ।' राज्ञा चिन्तितम्—ये मया न्यायवादित्वो गुरुत्वेनाङ्गीचक्रिरे तेषां पृष्ठिमद्यापि पापा न मुञ्चन्ति । ततो राज्ञा भणितः स एव पुरुषः, यथा—'शीघ्रं राज्ञीपार्श्वे गत्वा भण, भद्र देव एवं भाषयति—यत् तवाग्रे वस्तु कैश्चित् तन्मध्यादेकमपि पूगीफलं यदि गृहीतं

तदाऽऽत्मनः स्थानं चिन्तनीयम् ।' ततस्तेन तथोक्ते भयभीतया भणितं राज्ञ्या—'भो ! यद् येनानीतं तत्तेन स्वगृहे नेतव्यम् । मम नास्ति प्रयोजनं पूगीफलमात्रेणापि ।' एवमेषोऽप्युपायो विफलतां प्राप्तः ।

§ १६ ) ततश्चिन्तितस्तैश्चतुर्थ उपायो यथा—यदि राजा देशान्तरागतमुनीन् बहुमंस्यते तदा सर्वाणि देवसदनानि शून्यानि मुक्त्वा देशान्तरेषु व्रजिष्याम इति प्रघोषश्चक्रे । केनापि राज्ञे निवेदितम् । राज्ञोक्त-मतीव शोभनम्, गच्छतु यत्र रोचते । राज्ञा देवगृहपूजका वृत्त्या बटुका धारिताः । सर्वे देवाः पूजनीया युष्माभिरिति भणित्वा । परं देवगृहमन्तरेण बहिःस्थातुं न शक्यते । ततः कोऽपि केनापि व्याजेनागतः । किं बहुना सर्वेऽप्यागताः स्थिताश्च गृहेषु ।

§ १७ ) श्रीवर्द्धमानसूरिरपि सपरिवारः क्षितिपतिसम्मानेनास्खलितप्रचारः सर्वत्र देशे विहरति । कोऽपि किमपि कथयितुं न शक्नोति । ततः श्रीजिनेश्वरपण्डितः शुभलग्ने स्वपट्टे निवेशितः । द्वितीयोऽपि भ्राता बुद्धिसागर आचार्यः कृतः । तयोर्भगिनी कल्याणमतिनाम्नी महत्तरा कृता ।

पश्चात् जिनेश्वरसूरिभिर्विहारक्रमं कुर्वद्भिः जिनचन्द्र-अभयदेव-धनेश्वर-हरिभद्र-प्रसन्नचन्द्र-धर्मदेव-सहदेव-सुमतिप्रभृतयो बहवः शिष्याः प्रचक्रिरे । ततो वर्द्धमानसूरयः सिद्धान्तविधिना समाधिना देवलोकश्रियं प्राप्ताः ।

§१८ ) पश्चात् श्रीजिनेश्वरसूरिभिः श्रीजिनचन्द्राभयदेवौ गुणपात्रमेताविति ज्ञात्वा सूरिपदे निवे-शितौ । क्रमेण युगप्रधानौ जातौ । अन्यौ च द्वौ सूरी धनेश्वरो जिनभद्रनामा, द्वितीयश्च हरिभद्राचार्यः । तथा धर्म्मदेव-सुमति-विमलनामानस्त्रय उपाध्यायाः कृताः । धर्म्मदेवोपाध्याय-सहदेवगणी द्वावपि भ्रातरौ । धर्म्मदेवोपाध्यायेन हरिसिंह-सर्वदेवगणी भ्रातरौ सोमचन्द्रपण्डितश्च शिष्या विहिताः । सहदेवगणिना अशोकचन्द्रः शिष्यः कृतः । सचातीव वल्लभ आसीत् । स च श्रीजिनचन्द्रसूरिणा विशेषेण पाठयित्वा आचार्यपदे निवेशितः । तेन च स्वपदे हरिसिंहाचार्यो विहितः । अन्यौ द्वौ सूरी प्रसन्नचन्द्र-देवभद्राख्यौ । देवभद्रः सुमत्युपाध्यायशिष्यः । प्रसन्नचन्द्राचार्यप्रभृतयश्चत्वारोऽभयदेव-सूरिणा पाठितास्तर्कादिशास्त्राणि । अत एवोक्तं श्रीचित्रकूटीयप्रशस्तौ श्रीजिनवल्लभसूरिभिः, यथा—

> सच्चर्कन्यायचर्चार्चितचतुरगिरः श्रीप्रसन्नेन्दुसूरिः,
> सूरिः श्रीवर्द्धमानो यतिपतिहरिभद्रो मुनीड् देवभद्रः ।
> इत्याद्याः सर्वविद्यार्णवकलशभुवः संचरिष्णूरुकीर्ति-
> स्तम्भायन्तेऽधुनापि श्रुतचरणरमाराजिनो यस्य शिष्याः ॥

§१९ ) श्रीजिनेश्वरसूरय आशापल्ल्यां विहृताः । तत्र च व्याख्याने विचक्षणा उपविशन्ति । ततो विदग्धमनःकुमुदचन्द्रिकासहोदरी संविग्नवैराग्यवर्द्धनी 'लीलावती' अभिधाना कथा विदधे श्रीजिनेश्वर-सूरिभिः । तथा डिंडियाणकग्रामप्राप्तैः पूज्यैर्व्याख्यानाय चैत्यवास्याचार्याणां पार्श्वाद् याचितं पुस्तकम् । तैः कलुषितहृदयैर्न दत्तम् । ततः पश्चिमप्रहरद्वये विरच्यते प्रभाते व्याख्यायते । इत्थं च तत्रैव 'कथानककोशः' चतुर्मास्यां कृतः ।

§२० ) तथा मरुदेवानाम्नी गणिन्यभूत् । तया चानशनं गृहीतम्, चत्वारिंशद्दिनानि स्थिता, श्रीजिनेश्वरसूरिभिः समाधानमुत्पादितं तस्याः । भणिता च यत्रोत्पत्स्यते तत्स्थानं निवेदनीयम् । तयापि

'एवं भगवन्! विधास्ये' इति प्रतिपन्नम्। पञ्चपरमेष्ठिनः स्मरन्ती सा स्वर्गं गता। जातो देवो महर्द्धिकः। एवं च तावदितश्च श्राद्ध एको युगप्रधाननिश्चयाय श्रीउज्जयन्तगिरौ गत्वा, 'साधिष्ठायकं सिद्धिक्षेत्रमेतद्, अतोऽम्बिकादिदेवताविशेषो यदि मम युगप्रधानं प्रतिपादयिष्यति ततोऽहं भोक्ष्ये नान्यथे'ति सत्त्वमालम्ब्यावस्थितः। उपवासान् कर्तुमारब्धः। एतस्मिन्नवसरे महाविदेहे श्रीतीर्थङ्करवन्दनार्थं गतस्य ब्रह्मशान्तेस्तेनार्यिकाजीवदेवेन संदेशको दत्तः। यथा, त्वया श्रीजिनेश्वरसूरीणामग्रे इदं निवेदनीयम्। तथा हि—

'मरुदेवीनाम अज्जा, गणिणी जा आसि तुम्ह गच्छम्मि।
सग्गंमि गया पढमे, जाओ देवो महिड्ढिओ॥ १
टक्कलयम्मि विमाणे दुसागराऊ सुरो समुप्पन्नो।
समणेसरस्स जिणेसरसूरिस्स इमं कहिज्जासि॥ २
टक्कउरे जिणवंदणनिमित्तमेवागएण संदिट्ठं।
चरणम्मि उज्जमो मे! कायव्वो किं च सेसेहिं॥ ३

तेनापि च ब्रह्मशान्तिना स्वयं गत्वाऽसौ संदेशकः सूरिपादानां पुरो न प्रकाशितः। किं तर्हि युगप्रधाननिश्चयनिमित्तप्रारब्धोपवासश्रावक उत्थापितः। ततस्तस्याञ्चले लिखितान्यक्षराणि यथा—'म स ट-स ट च' भणितश्च गच्छ पत्तने यस्याचार्यस्य हस्तेन प्रक्षालितानि यास्यन्त्येतान्यक्षराणि स एवेदानींतनकाले भारते वर्षे युगप्रधानः। ततस्तेन श्रीनेमिजिनं वन्दित्वा कृतपारणकेन पत्तनमागतेन सर्वासु वसतिषु गत्वा दर्शितान्यक्षराणि, परं न केनापि बुद्धानि। यदा तु श्रीजिनेश्वरसूरिवसतौ गत्वा दर्शितान्यक्षराणि तदा वाचयित्वा गाथात्रयमेतदिति समुत्पन्नप्रतिभैश्चेतसि पर्यालोच्य श्रीजिनेश्वरसूरिभिस्तान्यक्षराणि प्रक्षालितानि। ततस्तेन श्रावकेण चिन्तितम्—निश्चितं युगप्रधान एष इति। विशेषतो गुरुत्वेन चाङ्गीकृत इति। इत्येवं श्रीमहावीरतीर्थङ्करदर्शितधर्मप्रभावनां कृत्वा श्रीजिनेश्वरसूरयः देवलोकं प्राप्ता इति॥

§२१) पश्चाज्जिनचन्द्रसूरिवर आसीद् यस्याष्टादशनाममालाः सूत्रतोऽर्थतश्च मनस्यासन्। सर्वशास्त्रविदा येनाष्टादश(?)सहस्रप्रमाणा 'संवेगरंगशाला' मोक्षप्रासादपदवीभूता भव्यजन्तूनां कृता। येन जाबालिपुरे विहृतेन श्रावकाणामग्रे व्याख्यानं 'चीवंदणमावस्सये'त्यादिगाथायाः कुर्वता ये सिद्धान्तसंवादाः कथितास्ते सर्वे सुशिष्येण लिखिताः। शतत्रयप्रमाणो दिनचर्याग्रन्थः श्राद्धानामुपकारी जातः। सोऽपि श्रीवीरधर्मं याथातथ्येन प्रकाश्य दिवं गतः॥

**इति सुमतिगणिकृद्गणधरसार्द्धशतकबृहद्वृत्तिगतं**
**श्रीजिनेश्वरसूरिचरित्रवर्णनं समाप्तम्।**

# अज्ञातकर्तृक-कतिचित्-खरतरगच्छपट्टावलिगताः श्रीजिनेश्वरसूरिविषयकाः संक्षिप्तोल्लेखाः ।

[ १ ]

**उद्योतनसूरि**[ पट्टधर ]**श्रीवर्द्धमानसूरिभिः** श्रीविमलदंडनायकः प्रतिबोधितः । **तदभ्यर्थनया षण्मासीं** यावदाचाम्लानि कृत्वा षण्मासान्ते ध्यानाकृष्टः धरणेन्द्रः समागतः । हस्तं योजयित्वा **पृष्टवान्**—**भगवन्! किमर्थमाकृष्टः?** भगवता उक्तम्—पातालात् श्रीजिनमूर्त्तिं प्रकटीकुरु, यथात्र पर्वते **प्रासादं कारयामः**। ततो धरणेन्द्रेण पातालात् श्रीयुगादिमूर्त्तिर्वज्रमयी प्रकटीचक्रे । तदा **च** गुरुणा **स्तुता वन्दिता**। ततः धरणेन्द्रात् श्रीसूरिमन्त्ररहस्यानि पृष्टानि । तेन सर्वाणि कथितानि । ततः **श्रीविमल-दंडनायकेन तत्रस्थान्** मिथ्यादृष्टीन् द्विजानाकार्य मूर्त्तिर्दर्शिता । उक्तं च—भोः! **पश्यत, अत्र श्रीजिन-मूर्त्तिश्चिरंतना** प्रकटीजाता । भवद्भिरुक्तमभूत् यत् श्वेताम्बरतीर्थं नाभूत् । तदलीकं जातम् । **अथ प्रासादकरणे निषेधो न कार्यः** । ततो विमलदंडनायकेन प्रचुरद्रव्यं दत्वा फकारपंचकेन **भूमिं पूरयित्वा** प्रासादः कारितः । श्रीजिनशासने महती प्रभावना तीर्थोन्नतिश्चक्रे ।

श्रीपत्तनवास्तव्यौ जिनेश्वर-बुद्धिसागरौ **ब्राह्मणौ** । महाविद्वांसौ । मोक्षार्थं सोमनाथवन्दनाय **चलितौ । सोमनाथस्तयोरुपरि संतुष्टः** । सन्मुखं समागत्य कथितम्—किमर्थमत्र समागतौ? **ताभ्यामुक्तम्—मोक्षाय** । तेनोक्तम्—मम सेवया मोक्षो न प्राप्यते । तर्हि मोक्षः कस्य पार्श्वे याच्यते? **तेनोक्तम्—श्रीवर्द्धमानसूरीणामादेशं** कुर्वाथाम्, यथा मोक्षः प्राप्यते । ताभ्यामुक्तम्—ते कुत्र संति **साम्प्रतम्!** **तेनादिष्टौ** तत्र पत्तने संति । तौ तत्र समागतौ । गुरुभिः सम्यक् प्रतिबोधितौ । क्रमेण **जिनेश्वरस्य भट्टारकपदं** जातम् । **बुद्धिसागरस्य आचार्यपदं** जातम् । पश्चात्स्वयं अनशनेन अर्बुदाचले दिवं गताः ।

**श्रीजिनेश्वरसूरिभिः** लीलावतीकथा अनेकार्था कृता, कथाकोशश्च । तथा **मरुदेविगणिन्या** अनशनं गृहीतम् । चत्वारिंशद्दिनानि स्थिता । श्रीजिनेश्वरसूरिणा समाधानमुत्पादितम् । **भणितम्—यत्रोत्पत्स्यसे** तत्स्थानं कथनीयम् । तया अंगीकृतम्—कथयिष्यामि । तदा ब्रह्मशान्तिः श्रीसीमंधरस्वामि-वन्दनार्थं महाविदेहे गतः । तस्याग्रे मरुदेविदेवेन श्रीगुरूणां च **म स ट स ट च** इति संदेशो भणितः ।

**मरुदेविनाम अज्जा गणिणी जा आसि तुम्ह गच्छंमि । सग्गंमि गया पढमे, देवो जाओ महड्ढिओ ॥ १**
**टक्कलयंमि विमाणे दुसागराऊ सुरो समुप्पन्नो । समणेसरस्स जिणसरसूरिस्स इमं कहिज्जासु ॥ २**
**टक्कउरे जिणवंदणनिमित्तमेवागएण कहेज्जासु । चरणंमि उज्जमो मे कायव्वो किं विसेसेण ॥ ३**

**संवत् १०२४ (?) वर्षे अणहिल्लपत्तने** चैत्यवासिनो निर्जिताः । श्रीदुर्लभराजसमक्षं **श्रीजिनेश्वर-सूरिभिः पूर्वं यदाशीर्वादो दत्तस्तच्चेत्थम्**—

**श्रिये कृतनतानंदाः, विशेषवृषसंगताः । भवन्तु तव राजेन्द्र! ब्रह्म-श्रीधर-शंकराः ॥ १**

**इति श्रीजिनेश्वरेण** श्रीदुर्लभराज्ञः आसीर्वादो दत्तः । विशेषधर्मेण संगताः । द्वितीयपक्षे विः **पक्षी राजहंसः**, शेषः शेषराजः, वृषः वृषभस्तैस्संगताः । **ब्रह्मज्ञानश्रीधारिणस्तीर्थंकराः** । **ब्रह्मा विष्णुर्महेश्वरश्च । आसीर्वादानन्तरं** वादः । पश्चात्ते निर्जित्य खरतरबिरुदः प्राप्तः । श्रीधनपालपितृप्रतिबोधकारकः । **शोभनदीक्षादायकः** । ततो द्वादशवर्षानन्तरं धनपालः प्रतिबोधितः । सम्यक्त्वधारी सुश्रावको जातः ।

## [ २ ]

तेहनइ पाटि श्रीवर्धमानसूरि जिणे मालवाथी शत्रुंजय यात्रार्थं जातां संघसु रात्रे रोहिणीशकटमध्ये आकाशे बृहस्पतिप्रवेश देखी गच्छवृद्धि थाती जाणी समीपस्थ अन्य साधु-अभावे बह्वाल्य निज शिष्यनइ वासाभावेन छगणचूर्णीय वासक्षेप करी सूरिपद दीधउ। ततो गच्छवृद्धिः। जिणे १३ पातिसाह छत्रोद्दालक चन्द्रावती नगरी स्थापक विमलदण्डनायक कारित श्रीअर्बुदाचलोपरि श्रीविमल-वसही प्रासादि ध्यानबलि वालीनाह क्षेत्रपाल अनइ वज्रमय श्रीआदीश्वरनी मूर्ति प्रकट करी थापी। वली जिणे ६ मासतांइ आंबिल करी धरणेन्द्र प्रकट करी सूरिमंत्र शुद्ध कीधउ। आबू उपरि स्वर्गि पहुता।

तेहनइ पाटि श्रीजिनेश्वरसूरि हूया। ते किम? श्रीवर्धमानसूरि सरसइ पाटणि स्नान करी आवता जिनेश्वर बुद्धिसागर भाई। ब्राह्मणना मस्तकमांहि रही माछली दिखाडी। दया चित्तइ प्रतिबोधी दीक्षा लहि निकल्या। क्रमइ क्रमइ बेइ साधु भाई गीतार्थ हूया। वर्धमानसूरिइ जिनेश्वरसूरि पाटि थाप्या। बुद्धिसागरनइ आचार्यपद दीधउ। कल्याणमति महत्तरा कीधी। श्रीजिनेश्वरसूरि अणहिल्लपाटणि पहुता। तिहां सोम पुरोहितनइ घरे रह्या। पुरोहितनइ साहाय्यइ करी संवत १०८० वरसि दुर्लभराज सभामांहि ८४ चैत्यवासी साथि वाद करतां राजइ पुस्तिका आणावि भण्डारमांहि श्रीदशवैकालिकसूत्र पुस्तिका ते माहि–"अन्नत्थं पगडं लेणं०" ए गाथायइ करी चैत्यवासी जीता। राजाइं कह्यउं ए अति खरा ते भणि खरतर बिरुद लाधउं। मरुदेवी गणिन्या अनशनेन ४० दिनस्थितायां श्रीजिने-श्वरेण समाधानमुत्पादितम्। भणितं च स्वोत्पत्तिस्थानं वाच्यम्। ततः स्वर्गोत्पन्नया श्रीसीमंधरवंदनार्थं गतया श्रीब्रह्मशान्तिः प्रोक्तः। श्रीगुरूणामिदं वाच्यम्–'म स ट स ट च' इति। कोऽर्थः। **"मरुदेवी नाम अज्जा०" १ "टक्कलयंमि वियाणे०" २ "टक्कउरे जिणवंदणं०" ३**

श्रीजिनेश्वरसूरिनइ पाटि संवेगरंगशालाप्रकरणना करणहार श्रीजिनचन्द्रसूरि हूआ।

## [ ३ ]

तेहनइ पाटि श्रीवर्धमानसूरि तेरह पातिसाह छत्रोद्दालक चन्द्रावती नगरीथापक विमल दण्डनायक कारित श्रीआबू ऊपरि श्रीविमलवसही प्रासादि ध्यानबलि वालीनाह क्षेत्रपाल अनइ हीरामय आदीसरनी मूरति प्रगटि करी थापी। वली जिणे छम्मास तांई आंबिल करी धरणेंद्र प्रकट करी सूरमंत्र खरो करायओ।

एकदा प्रस्तावि श्रीवर्धमानसूरिइ सरसइ पाटणि सनान करी आवतां जिनेश्वर अनइ बुद्धिसागर बे भाइ ब्राह्मण तेहना माथामांहि रही मांछडी दिखाडी दया दीषानी प्रतिबोधी दीखीया। तेहनि बहिनि कल्याणमति ते पीण दीखी। क्रमइ बेई साधु गीतार्थ थया। वर्धमानसूरइ श्रीजिनेश्वरसूरिनइ पाटि थाप्या। बुद्धिसागरनइ आचारिजपद दीधउ। कल्याणमति महत्तरा कीधी। श्रीजिनेश्वरिसूरि अणहिल पाटणि पहुची तिहां सामपुरोहितनइ घर रह्या। पुरोहितनइ साहाज्यइं करी संवत दस सय असीयइ श्रीदुर्लभराज सभामांहि चोरासी चैत्यवासीसुं वाद करतां राजपुत्रीयइ आणी भण्डारमांहिथी दश-वैकालिक पोथी ते मांहि 'अन्नत्थ पगडं लेणं' इत्यादि गाथायइ करी चैत्यवासी खोटा करी जीता। राजायइ कह्यउ ए अति खरा। तिहा जिनेश्वरसूरइ खरतर बिरुद लाधउ।

* * *

श्रीमद्वर्द्धमानसूरिशिष्यश्रीजिनेश्वरसूरिसन्दृब्धं

# कथाकोशप्रकरणम् ।

॥ ॐ नमः सर्वज्ञाय ॥

**नत्वा जिनं गुरुं भक्त्या वर्द्धमानं समासतः ।**
**कथाकोशस्य विवृतिं वक्ष्ये सूत्रानुसारतः ॥ १ ॥**

इह चातीव दुर्लभं लब्ध्वा मानुषत्वमार्यदेशोत्पत्त्यादिकां च समासाद्य[1] समग्रसामग्रीं सुखलिप्सुभिः पुरुषार्थेषु यत्नो विधेयः । यत उक्तम् –

**धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥**

परमपुरुषार्थश्च मोक्ष एव । तस्यात्यन्तिकानाबाधसुखहेतुत्वात् । तस्य च सम्यक्त्वादीनि साधनानि । **'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः'** – इति पूर्वसूरिवचनात् । अतस्तदुत्साहजनकं कथाकोशाख्यं प्रकरणं चिकीर्षुराचार्यः शिष्टसमयपरिपालनाय विघ्नविनायकोपशान्तये च, इष्टदेवतास्तवपूर्वमभिधेयप्रयोजनादिप्रतिपादकामिमामादावेव गाथामाह –

नमिऊण तित्थनाहं तेलोक्कपियामहं महावीरं ।
वोच्छामि [2]मोक्खकारणभूयाइं कइ वि नायाइं ॥ १ ॥

अत्र गाथार्धेनेष्टदेवतास्तवम्, उत्तरार्धेन च प्रयोजनादीन्याह – **'कइ वि नायाइं'** इत्यभिधेयपदम् । **'मोक्खकारणभूयाइं'** प्रयोजनपदम् । तदन्तर्गत एवाभिधेयाभिधानलक्षणः सम्बन्धोऽप्युक्त एवेति । पदघटना – **'नत्वा'** – प्रणम्य, कम् ? – **'तीर्थनाथम्'** – चतुर्विधश्रीश्रमणसङ्घाधिपम् । किंभूतम् ? – **'त्रैलोक्यपितामहम्'** – लोकत्रयस्य हितत्वात् पूज्यत्वाद् गुरुत्वाच्च पितामहम् । पातीति पिता, धर्म एव तज्जनकत्वाद्वा । कतममित्याह – **'महावीरम्'** – चरमतीर्थकरम् । अत एव प्रस्तुततीर्थनाथम् । **'वक्ष्ये'** – अभिधास्ये, **'मोक्षकारणभूतानि'** – सम्यक्त्वाद्युत्साहजनकानि । **'कतिचित्'** – स्तोकानि, **'ज्ञातानि'** – उदाहरणानि दृष्टान्तानिति गाथासंक्षेपार्थः ।

यथाप्रतिज्ञातमेवाह –

जिणपूयाए तहाविहभावविउत्ताए[3] पावए जीवो ।
सुरनरसिवसोक्खाइं सूयगमिहुणं इहं नायं ॥ २ ॥

**'जिनानाम्'**[4] – तीर्थकराणाम्, तद्बिम्बानामपि पूजा तत्त्वतस्तेषामेव पूजा, **जिनपूजा,** तया; किंभूतया ? – **'तथाविध[5]भाववियुक्तयाऽपि'** – विशिष्टबहुमानशून्ययाऽपि । अपेर्गम्यमानत्वात्[6] ।

1 B समासाद्य । 2 B मुक्ख° । 3 A °विउत्ताय । 4 B पूजया जिनेन्द्राणां । 5 B नास्ति 'तथाविध' । 6 B नास्ति वाक्यमिदम् ।

**'प्राप्नोति'** – लभते, **'जीवः'** – सत्त्वः, विषयप्राधान्यात् । **'सुरनरशिवसौख्यानि'** – तदुत्तरं भावप्रासेर्देवलोकनृमोक्षशर्माणि । **'शुकमिथुनमिह ज्ञातम्'** । किं तच्छुकयुगलम् ? – अत्र कथानकम् । तच्चेदम् –

## १. शुकमिथुनककथानकम् ।

अत्थि इहेव **भारहे** वासे **विंझगिरि**पायमूले एगा महाटवी । तत्थ य एगत्थ पएसे एगो सिंबलिपायवो भूमीपेरंतनिरूवणत्थमिव गयणयलमइगओ, उत्तरावहो व्व [1]पढंतकीरसंघाओ चिट्ठइ । तत्थ य – 'मा सुहारोहवच्छसाहानिवेसियनीडा भिल्लाईणमभिभवणिज्जा भविस्सामो' – त्ति बुद्धीए एगेणं सुयजुयलेणं कयं तस्स सिहरे नीडं । अन्नया विरहिणीहिययवणदावानलो साहीणपिययमाणं पमोयसंजणगो[2] पत्तो वसन्तो । तम्मि य मंजरिज्जंति पायवा । तओ छुहापीडिज्जमाणं तं सुयमिहुणयं सहयारमंजरीओ गहाय सनीडमागच्छइ । ताओ य[3] पुप्फफलभरक्कंताओ न सक्कइ[4] सनीडं पाविउं । इओ य[5] तत्थेव अडवीपएसे **वेयड्ढ**वासिविज्जाहरेहिं भगवओ तिलोयनाहस्स [6]जुगादिदेवस्स मुत्तासेलमई पडिमा पइट्ठिया अहेसि । जओ[7] सावरिं विज्जं जया देंति[8] पडिच्छंति य तया तीसे पडिमाए महामहिमं काऊणं तीसे पुरओ देंति पडिच्छंति य । तओ सबरवेसधारिणो विज्जाहरा तं विज्जं साहेंति । तं च सुयमिहुणयं विस्सामनिमित्तं तं पएसमागयं । ताओ मंजरीओ भगवओ[9] सीसे मुंचइ । खणं विसमित्ता सनीडं गच्छइ । एवं वच्चंति वासरा । अण्णया य[10] विज्जाहरेहिं[11] विरइयविसिट्ठपूयं तं दट्ठूण – 'पूयणिज्जो को वि[12] एसो, ता अम्हे वि एयं[13] पूएमो त्ति' – संजायबुद्धिणो अन्नायजिणगुणत्तणओ विसिट्ठतब्बहुमाणविरहिएण तेण सुयमिहुणेण पूयणत्थं ठवियाओ मंजरीओ भगवओ सीसे । तओ य विसयब्भासजोगेणं निबद्धं तहाणुरूवं देवाउयं । पालिय तिरियाउयं मरित्ता उववन्नं[14] देवेसु मिहुणगं । मिहुणगभावेण पउत्तावहिणा नाओ पुव्वभवो सुरलोयागमणकारणं च । तओ आगम्म कया तीए पडिमाए महामहिमा[15] । पावियं सम्मत्तं । तओ तित्थगराणं कल्लाणगेसु **नंदीसरा**इगमणेणं तहा तित्थयराणं समोसरणकरण-[16]पिच्छणयदंसण-धम्मसवण-पज्जुवासणाईहिं वोलिंति पायसो दियहाइं । तओ संपत्तं विसुद्धतरदंसणं । देवाउयक्खएणं चुओ देवो पढमतरं । तहाविहभवियव्वयाए **सागेए** नयरे **जियसत्तु**णो रन्नो **धारिणी**ए देवीए समाहूओ गब्भे पुत्तत्ताए त्ति । जाओ पुण्णेसु दियहेसु सुकुमालओ देवकुमारोवमो दारगो । कयं वद्धावणयं । तो निव्वत्ते सूइकम्मे, अइक्कंते बारसाहे, कयं **सुरसुंदरो** त्ति से नामं । पंचधाईपरियरिओ वड्ढिउं पयत्तो[17] । देसूणअट्ठवरिसो उवणीओ लेहायरियस्स । अहिज्जियाओ पडिपुण्णाओ कलाओ । जाओ [18]वारिज्जयजोग्गो । वरिज्जंति पहाणरायकण्णगाओ । नेच्छइ[19] परिणेउं । विसन्नो जणगो[20] । इओ य सा मिहुणयदेवी **पाडलिपुत्ते** [21]**अरिमद्दणरन्नो पउमावई**ए गब्भे सुरलोगाओ[22] चुया, आहूया धूयत्ताए । जाया कालेणं अधरियसुरंगणारूवा । पइट्ठियं से नामं **पडिरूव** त्ति । [23]वड्ढिया देहोवच्च(च)एणं । [24]गहियाओ इत्थीजणजोग्गाओ कलाओ । जाव[25] जोव्वणत्था । सा य पुरिसद्देसिणी, नेच्छइ परिणेउं[26] । तओ से पिउणो पुरोहिएण सिट्ठं – **'अप्रवृत्ते रजस्येनां कन्यां दद्यात् पिता सकृद्'** – इत्यादि । विसन्नो अरिमद्दणो – हा ! नरए पाडिस्सइ[27] एस त्ति । भणियं मंतिणा **चंदेण** – 'देव ! मा विसायं करेह, कारेह सयंवरं' । भणियं सेसमंतीहिं – **'न एसो चक्कवट्टि-वासु-**

1 B °पदंत° । 2 B °संजणओ । 3 'य' नास्ति B । 4 B सक्किंति । 5 A इय । 6 A जुयाइ° । 7 B जाओ । 8 B दिंति । 9 A भगवंतो । 10 'य' नास्ति B । 11 B °हरेहि । 12 A कोइ । 13 'एयं' नास्ति A । 14 A उववन्न । 15 B 'महिमा' इत्येव । 16 B °पिच्छणपिच्छणय° । 17 B पवत्तो । 18 A वारेज्जय° । 19 B निच्छइ । 20 B जणओ । 21 A अरिदमण° । 22 B °लोयाओ । 23 A वड्ढियदे° । 24 A गाहिया । 25 A जाया । 26 नास्ति वाक्यमिदं B । 27 A पाडिस्संति ।

देव-पडिवासुदेवाइविरहिए काले कीरइ । अनायगे आओहणाइअसमंजससंभवाओ' । भणियं रन्ना – 'ता किं कीरउ ?' । भणियं सुमइणा – 'देव ! एईए रूवं चित्तफलए लिहाविय पेसेह पडिराईणं; रायकुमाराण य रूवं चित्तफलयलिहियमाणावेह । तत्तो नज्जिही भावो एईए, ताण य' । पडिस्सुयं रन्ना । पेसिया चित्तफलयहत्था पडिराईण पुरेसु[1] पुरिसा । गओ एगो सागेए । दंसियं चित्तफलयं जियसत्तुणो । तेण वि पेसिओ सो पुरिसो सुरसुंदरकुमारसमीवे । गओ सो तत्थ । पविट्ठो पडिहारनिवेइओ । दंसियं चित्तरूवं । जाओ अणुरागो[2] कुमारस्स । अवि य –

निज्झाएइ कुमारो जं जं अंगं सिणिद्धदिट्ठीए । तत्तो दुबलगा इव पंकक्खुत्ता न उत्तरइ ॥

तओ उच्छलिओ रोमंचो । मुत्ताहलभूसियंगो विव जाओ सेयबिंदुविच्छुरियंगावयवो । ससज्झसो विव किंचि[3] अवत्तक्खरं भणंतो पुणरुत्तं पलोइउं पउत्तो । तओ पम्हुट्ठो अप्पा, अवगयलज्जो भणिउमाढत्तो –

गोत्तक्खलणेण सुंदरि ! मा रुससु नत्थि एत्थ मह दोसो । वाया एत्थऽवरज्झइ न माणसं एत्थ पत्तियसु ॥
तह वि अवराहलेसं खमसु ममं तुज्झ पायपडिओ हं । निस्संसय मह [4]जीवस्स सामिणी देवि तं एक्का[5] ॥

इच्चाइ विलवंतो निवेइओ परियणेण जणयाणं । तुट्ठो राया धारिणी य । सद्दाविओ फलहियावाहओ गोहो; भणिओ य – 'अरे ! का एसा ?' । भणियमणेण – 'अरिमद्दणस्स[6] रन्नो पउमावईए देवीए अत्तिया पडिरूवा नाम एसा दारिय' [7]त्ति । भणियं रन्ना कुमारस्स – 'एयं वरेह' । भणियं गोहेण – 'देव ! सा पुरिसद्देसिणी पत्तजुव्वणा [8]वि परिणेउं नेच्छइ' – इच्चाइ सिट्ठो पुव्ववइयरो । 'ता देव ! कुमाररूवं चित्तफलयलिहियं पेसेह, जेण विन्नायतीयभावा[9] वारेज्जयं [10]कारेमो' त्ति । बहुमन्नियं रन्ना । पेसियं कुमाररूवफलयं । तं गहाय गओ गोहो नियसामिणो समीवे । दंसियं फलयं रन्नो । कहिओ वुत्तंतो । तओ सहीए हत्थे दाऊण पेसियं फलयं पडिरूवाए । गया सा तं गहाय । भणियमणाए – 'पिच्छ पियसहि ! किंचि अच्छेरयं' ति । गहियं तीए फलयं । निरूविउं पयत्ता । जाव जायसज्झसाए अद्धच्छिपिच्छिएहिं[11] निरूवियं कुमाररूवं सव्वंगेहिं । जाओ[12] आबद्धसेओ से विग्गहो[13] । खलइ भारई । पहरिउमाढत्तो विसमसरो । गहिया रणरणएणं । पम्हुट्ठो अप्पा । करेइ [14]पणयकुवियाइं । निरूवेइ दिसाओ । उद्विग्गइ झ त्ति, नीससइ उण्हं-उण्हाइं दीहनीसासाइं । भणियं वसंतियाए से सहीए[15] – 'पियसहि ! किमेयं ?' ति । भणियं पडिरूवाए[16] – 'गोत्तक्खलणाए ममं परिभवइ अज्जउत्तो' । अवरोप्परं निरिक्खिय हसिऊण भणियं गोरीए –

'जो पियसहिं पवंचइ अलाहि एएण सुंदरि पिएण । वच्च अरे सुरसुंदर दइयाए घरं न कज्जं ते' ॥

भणियं पडिरूवाए –

'हाहा सामि ! न जुत्तं सहीण जं[17] चोयणाए मं मोत्तुं । जइ जासि निच्छयं तो मरामि तुह विरहसंतत्ता' ॥

एत्थंतरे समागया से जणणी । संवरिओ[18] अप्पा । विलिया झ त्ति । भणियं जणणीए – 'पुत्ति ! न कया अज्ज चेइयाणं पूया ?, न वंदिया गुरुणो ?, आगच्छ, भोयणवेला अइक्कमइ; ता भुंजसु संपयं' ति ।

1 A पुरे । 2 B अणुराओ । 3 नास्ति 'किंचि' B । 4 B °मिह जीयस्स । 5 A एक्क । 6 A अरिदमणस्स । 7 B दारिया एस त्ति । 8 A °जोव्वणा वि । 9 B °भावो । 10 B करेमो । 11 A °पेच्छिएहिं । 12 A जाव । 13 A विग्गहो । 14 A पणइ° । 15 B सहियाए । 16 A °रूवाए वुत्तं; 'गोत्तं' नास्ति B । 17 A संचोयणाए । 18 A संभरिओ ।

समाहूयाओ वसंतियापमुहाओ सहीओ – 'आगच्छह, भुंजह[1]' त्ति । भणियमणाहिं – 'अम्हे राइणो समीवं संपयं गमिस्सामो । जिमियाओ, न पुणो भोत्तव्वे[2] संपयमिच्छा अत्थि' त्ति । गयाओ रन्नो समीवं । निवेइओ वुत्तंतो । तुट्ठो राया । पेसिया पहाणपुरिसा जियसत्तुराइणो – 'जहा सिरिमिव केसवो, गोरीमिव संभू, रइमिव मकरकेऊ, [3]सयराहं गिण्हउ सुरसुंदरकुमारो पडिरूवं, पुव्वकयकम्मपायवफलमणु- ५ हवउ विसयसुहमणाए सद्धिं, एयस्स कारणे[4] चेव पयावइणा निम्मिया एस त्ति । जओ अन्नरायकुमाराण नामं पि न सोउमिट्ठमणाए, सुरसुंदरचित्तलिहियरूवदंसणेणं जाया मयरकेउणो सरगोयरं ति; ता अकालहीणं[5] पेसेह कुमारं' – त्ति भणिऊण । गया ते सागेए । बहुमन्निया जियसत्तुणा । पडिवन्नं तव्वयणं । गणिओ पत्थाणदियहो । पयट्टो पहाणमंतिसामंतसहिओ सुरसुंदरकुमारो । कमेण पत्तो पाडलिपुत्तसमासन्नगामंतरे । तत्थावासियस्स गया पहाणपुरिसा निवेइउं कुमारागमणं । तुट्ठो अरिमद्दणो[6] । १० निरूविओ आवासो । संपट्ठिओ सबलवाहणो राया अत्तोगईयाए । कुमारस्स दंसियमावासट्ठाणं । पेसियं खाण-जव-घासाइयं करि-तुरयाणं । समाढत्ता कोडुंबियपुरिसा लक्खपागाइतेल्लहत्था कुमाराईणं संवाहणाए । संवाहिऊण उव्वट्टिया पहाणगंधसारेहिं[7] चुण्णेहिं । मज्जाविया कालाणुरूववारिणा । उवणीयाओ गंधकासाइयाओ । ताहिं विसोहियसरीराणमुवणीयं विलेवणं । समप्पियाइं [8]सुगंधिकुसुमाइं । नियंसाविया पहाणखोमजुयलाइं । उवविट्ठा वरासणेसु । समाढत्तं पिच्छणयं ।

१५ एयावसरे समागयाओ पडिरूवाए सहीओ । पडिहाराणुन्नायाओ [9]य पविट्ठाओ । दिन्नाइं आसणाइं । सुहासणत्थाणं निरूवियं तत्तोहुत्तं कुमारेण । भणियं वसंतियाए –

'पडिवन्नंमि तुमंमी पहरइ मयरद्धओ कहं[10] कुमर ! । पडिवन्नपालणे वि हु कह णु पमाओ महासत्त !' ॥

विहसिय भणियं सुबुद्धिणा कुमारामच्चेण –

'अद्दिस्समाणसत्तू पहरइ कुमरे[11] वि निद्दओ मयणो । पडिरूवानामक्खरसवणेणं चिंतणेणं च ॥

२० तो पहरंतो ठाही अवरोप्परमीलणंमि एयाण । तो वारिज्जयदियहं सिग्घयरं सुयणु ! चिंतेह' ॥

दावियाइं वत्थाईणि[12] सहीणं । पेसियाइं पहाणकुसुमाइं पडिरूवाए । गयाओ तीए समीवं । समप्पियाइं कुसुमाइं । गहियाइं तीए । चिंतियमणाए – 'पण्हमेयं, ता पेसेमि उत्तरं । जओ कुसुमागमेण[13] पइणो संवासेण[14] कज्जं' ति । तओ पेसिया अणाए सेज्जा कुमारस्स । नायमणेण । एयावसरे समागया नाणावंजणसमाउला रसवई । भुत्ता जहाविहिं[15] । एवं वच्चंति दियहाइं । जाव समागयं वारिज्जयदिणं ।

२५ तओ कयकोउगमंगलो सेयवरगंधहत्थिखंधगओ सियायवत्तेणं धरिज्जंतेणं, उद्धुव्वमाणेहिं[16] सियचामरेहिं[17], पढंतेणं भट्टघट्टेणं, गायमाणेहिं वरगायणमिहुणगेहिं[18], अहिणविज्जंतो वरनाडएहिं, दाविज्जंतो अंगुलिसहस्सेहिं, पेच्छिज्जंतो अट्टालगगयाहिं वरनायरीहिं[19], पत्तो सुरसुंदरकुमारो [20]वारिज्जयमंडवदारं । कयाइं तत्थ सहीहिं सालियाजोग्गयाइं[21] करणिज्जाइं । पविट्ठो अब्भंतरे । दिट्ठा सियचंदणविलित्तंगी सियकुसुमसोहिया नियत्थसियदुगुल्ला देवयाए पुरओ पडिरूवा । अवि य –

३० अद्धच्छिपिच्छिएहिं[22] पिच्छइ कुमरं[23] जया उ पडिरूवा । अमयरसेण व सित्ता वेएइ अपुव्वरसमेसा ॥

---

1 A हुंजह । 2 B भुत्तव्वे । 3 B सयंवरायंति । 4 B कारणा । 5 B °हाणं । 6 A अरिदमणो त्ति । 7 B सारचुण्णेहिं । 8 B सुगंध° । 9 'य' नास्ति A । 10 A कह कुमार । 11 A कुमारे । 12 B वत्थाणि । 13 A कुसुमागमे । 14 A संवासे । 15 B जहाविहं । 16 A °माणीहिं । 17 A °चामराहिं । 18 A वरपाणमिहुणेहिं । 19 B °नारीहिं । 20 A वारेज्जय° । 21 A जोग्गाइं । 22 A °पेच्छिएहिं । 23 A कुमारं ।

अमयासारासित्तो कुमरो वि य तीए दंसणाहिंतो। किंपि अणग्घेयरसं[1] पत्तं मिहुणं करप्फंसे[2] ॥

सिलोगाइदाणपुव्वयं निग्गओ माइहराओ[3]। समागओ वेइयाए। समाढत्तं अग्गिहोत्तं माहणेण। तओ जहाविहि दाणपुव्वयं परियंचिओ हुयासणो चत्तारिवेलाओ मिहुणएणं। तत्थ य आऊरिया संखा। पवाइयाइं[4] तूराइं। पगीयाओ अविहवविलयाओ। पढियं माहणेहिं। तओ वित्तो वीवाहो। उवविट्ठं मिहुणयं, सहीओ कुमारमित्ता य वेइयाए। नच्चंति वारविलासिणीओ। अरिमद्दणो वि पहाण- ६ मंडवासीणो सइए य साहस्सिए य दाणविसेसे पडिच्छइ। पसाएइ य तहारिहेहिंतो तहारिहाणं। निउत्ता कोडुंबियपुरिसा—'सबाहिरब्भंतरं आसियसमज्जियं, ऊसियपडायं, वंदणमालोवसोहियघरदारं, विमुक्क-चारागारं, उस्सुक्कं, उक्करं, अचाडभडप्पवेसं नगरं करेह कारावेह य। एयमाणत्तियं खिप्पमप्पिणह'। तेहिं वि 'तह' त्ति संपाडियं। पूइज्जंति नगरदेवयाओ, दक्खिणिज्जंति माहणा, सक्कारिज्जंति गुरवो, समा-णिज्जंति [5]कुलसुवासिणीओ। कुमारो वि सालियाहिं परिहासं कुणइ। जाव खणमेक्कं पडिरूवावि य कुमरं ११ पिच्छइ अद्धच्छियाहिं। ताहे [6]वाहराविओ कुमारो राइणा सह नियगपरिवारेण। नियंसाविओ सप-रियणो पहाणवत्थाहरणाइं। दंसियाओ से संपयाणीकयाओ करि-तुरय-संदणावलीओ[7]। तओ भुत्ता सह राइणा सव्वे वि। वाहरिया पडिरूवा। समप्पियाओ अइसिणिद्धाओ अणेगदास-चेडीओ। दिन्नाओ भूरि वारुयाओ। समप्पिया दससाहस्सिएणं गोवएणं दस वया। उवणीयाइं पंचवन्नाइं अमाणसचिजुत्ताइं संखाइयाइं रयणाइं। निरूविया कोलघरिया पहाणमच्चा य। गओ कुमारो सपरियणो नियगावासं। १६ समागयाओ सहीओ तमुद्देसं सह पडिरूवाए। समागया जणणि-जणगा। भणिओ सुरसुंदरो—'पुत्त! पडिवालेसु कइ वि दियहाइं[8] जाव [9]विओगानलदुक्खं जिणामो। एसावि मणयं खरहियया हवइ' त्ति। पडिस्सुयं कुमारेण। नियत्तो राया वि। धीरियाओ सहियाओ ठियाओ विउसविणोएणं कंचि कालं। जाव समागतो [10]पदोसकालो। संपत्तो निउत्तपरियणो मंगलनिमित्तं। कयाइं मंगलाइं कुमारस्स। पडि-रूवाए य आरत्तियाणंतरं समाढत्तं पिच्छणयं। भणियाओ सहीओ कुमारेण—'जवणियंतरियाओ निय- २० सहीए समं खणंतरं चिट्ठह, जाव परियणोऽवसरनिमित्तमागच्छइ। नवरं न एत्थ मन्नू कायव्वो। [11]रायाणं दारा ण सव्वजणपिच्छणिज्जा भवंति, ठिई एस' त्ति। पडिस्सुयं ताहिं[12]। समागया लोया। सम्माणिऊण सिग्घयरं पेसिया। निरूविया अंगरक्खा। ठिओ कुमारो जवणियब्भंतरे। ठिया विसिट्ठविणोएणं। भणियं वसंतियाए—'कुमार! विस्समसु, परिगलिया रयणी बहुगा'। निरूवियाओ ताणं सिज्जाओ विचित्तपडमंडवे। समाणत्ता पाहरिया। पेसियाओ सहीओ। तत्थ ठिओ सयणिज्जे पडिरूवाए सह २५ कुमारो। खणंतरं विसयसुहमुवभुंजिय[13] विगयसज्झसं पसुत्तं मिहुणयं। जाव पाहाइयतूरखुम्मीसवरवा-रविलासिणीगीयरवेणं पढंतभट्टघट्टनिग्घोसेणं विबुद्धं मिहुणयं। उवणीयं मुहसोयं, पंचसोगंधियं तंबोलं च। उवविट्ठमासणे। उवणीयं घयभायणं। पाडिया दिट्ठी दोहि वि। समप्पियं तं पुरोहियस्स। महुभायण-दहिभायणाइं पि। तेसु वि पाडिया दिट्ठी। ताइं पि तहेव। उवणीयाइं पहाणाइं अहयाइं नासा-नीसासवोज्झाइं चक्खुहराइं वत्थाइं। नियंसियाइं दोहिं पि। कयं चंदणचंदणयं। [14]आबद्धाइं आभरणाइं ३० कुसुमाइं च। समागयाओ सहीओ। पसाइयाइं वत्थगंधमल्लाइं तासिं। समाढत्ता पुरिसा—'हत्थिरयणं वारुयाओ य पउणीकरेह'। तेहि वि 'तह' त्ति उवट्ठवियं सव्वं। समारूढो सह देवीए कुमारो हत्थिर-

1 A अणग्घेय°। 2 B मिहुणयकरप्फंसा। 3 B माइहरयाओ। 4 B वाइयाइं। 5 A कुलसोव-सिणी°। 6 A वाहरिओ। 7 A संदणालीओ; B दगणावलीओ। 8 A दिणाइं। 9 A विओया°। 10 B समागओ पओससमओ। 11 A राइणं। 12 A तीहिं। 13 B सुहं भुंजिय। 14 A आबद्धाइं।

